श्रीगणेशायनमः ॥ श्रीदंसदाहंत्तद्वयारविंदोपादारविंदंवरदस्यवंदे मंदोऽपियस्यस्मरणेनसद्योमीवणिंक्योपमतांस्समेति १ उदारधीमंदरभूधरेणप्र
मथ्यहोरागमसिंधुराजम् श्रीढुंढिराजः कुरुतेकिलार्यामायोसपर्याममलोक्तिरत्नैः २ ज्ञानराजगुरुपादपंकजंमानसेस्खलुविचिंत्यमक्तितः जातकाभरणना
मजातकंजातकज्ञमुखदंविधीयते ३ शास्त्रोक्तयोजन्मपत्रींकरोतिनानार्थंयालोकनान्नसवित्तम् अत्युद्भयस्यात्ततोजातकेस्मिन्कुर्वेव्यक्तोजातको
किंचसर्वोम् ४ विविधपत्रीकरणादराणांश्रमंविनानुक्रमलेखनार्थम् समर्थमेतत्प्रकटार्यमेवाऽस्वर्थंततोनामयथार्थमस्य ५ सन्मंगलाशीर्वचनान्विता
निपद्यानिचाग्रेसमुदीरयंते तान्येवपत्रीकरणेप्रवीणाश्रेयस्करणिप्रथमंलिखंतु ६ शुंडामंडलसंप्रसारकरणैर्मौलिस्थलादोलनैर्नेत्रोन्मीलनमीलनैररविभ
रलश्रीकर्णतालक्रमैः दानालिध्वनिभिर्विलासचरितैरूर्ध्वाननोद्गर्जितैर्जातानंदभरः करींद्रवदनोवः श्रेयसेकल्पताम् ७ पुनःपुनर्मंगलमूर्तिस्मरणमत्यूह
व्यूहनिवारणपरमेवेतिप्रचारः नानादानविधानयज्ञनिकरैरुग्रैस्तपोभिश्चिरात्सानेकल्पतरौप्रकल्पितफलावाप्तिःकथंचिद्भवेत् तूर्णंयच्चरणांबुजस्मरणतः
संपूर्णकामःपुमान्सोऽयंवोऽभिमतंददातुसततंहेरंबकल्पद्रुमः ८ सन्मानसावासविलासहंसीकर्णावतंसोत्तंसपद्मकोशाम तोषादशेषाभिमतंविशेषाद्देषाप्य
भाषभेवतीददातु ९ कल्याणानिदिवामणिःसुललितांकांतिंकलानांनिधिर्लक्ष्मीस्माततयोबुधश्चबुधतांजयिविश्चिरंजीवितां साम्राज्यंभृगुजोऽर्कजोविजयंतां
राहुर्बहूत्कतांकेतुर्यच्छतुतस्यवांछितमियंपत्रीयदीयोत्तमा १० ननुपूर्वजन्मोपार्जितानांसदसत्कर्मणांपरिपाकोऽस्मिनजन्मनिशुभाशुभफलावाप्तिकालादे
वव्यक्तोऽस्तीतिजातकागमोक्तप्रपंचेनकिंप्रयोजनमितिचेत्सत्यम् पूर्वोपार्जितकर्मपरिपाकः शुभाशुभफलोपलब्धिदर्शनादेवज्ञायते परमभीष्टकालेज्ञातुंनशक्यते॥
तथाचभाग्यमयेखंडितमखंडितारेशरिष्टभंगोप्यायुर्मानमित्यादिज्ञानार्थंजातकागमएवात्यर्थंसमर्थस्तदेकशरणत्वात् तथाहि दिनरात्रिविभागेनसूक्ष्मकाला
वयवसाधनोपायैस्तुर्यंचक्रयंत्रादिविचित्रयंत्रैरुपलक्षितातिस्पष्टसमयोपात्तलग्नादिद्वादशराशिचक्रेस्वोच्चादिगतानांग्रहाणांसदशानुक्रमेणाभीष्टसमयेपिप्रा
क्कर्मपरिपाकोऽवगम्यते रिष्टभंगःप्रकृष्टतुरिष्टस्यापिविनष्टिंविशीनष्टितद्वदायुर्दायानयनप्रकारेणवयःप्रमाणस्यचनिर्णयःस्यात् ॥ तस्मात्कृतंमतेनाधुनि
कानामवतेनप्रत्ययसिद्धत्वेनापिजातकस्याङ्गीकरणमुचितमेवेति ॥ उपार्जितेयत्सदसद्भिरिष्टैर्जन्मांतरेकर्मनरैरिदानीं होरागमस्तस्यविपाकमुच्चैर्दं

शाक्रमेण प्रकटीकरोति ११ साक्षात्मवेङ्काग्यनिरीक्षणाय सुनिर्मलादर्शतलं किलेदम् शास्त्रं विपश्चिद्भिरिनिधिप्रतर्तुं तमिस्त्रयोर्जेन च चारुमित्रम् १२ आधानका
लेकमलोद्भवेन वर्णावलिभिर्लिलतललांतराले याकल्पिता पश्यति दैवविन्नो होरागमज्ञानविलोचनेन १३ होरागमग्रामचरानुसारस्तेषां विचारः सुतरामुदारः
सिद्धांत एवाकलनं तदास्या ऽभ्यासो यदि स्याद्गणितद्रुपस्य १४ अपारहोरागमपारगामी पाथोजवीजे सुतरां प्रगल्भः सद्गोलविद्याकुशलः स एव भवेत्फला
देशविधौ समर्थः १५ श्रीजन्मपत्रीनामप्रदीपकेन मत्तेम वेङ्काविफलं समस्तं स्वपापप्रदीपेन यथाऽन्धकारस्थघटादिजातं प्रकटत्वमेति १६ सा जन्मपत्री विमलान
यस्य तज्जीवितं संततमंधकं स्यात् अनल्पमल्पं च ततोऽल्पकं वा न कल्पते भाग्यमितो वहेतोः १७ जन्मकालतिथिवारतारकाश्चापि योगकरणाभिधाः मंगलाय
किल संतु पत्रिका यस्य शास्त्रविहिता विरच्यते १८ ये वक्ष्यमाणाद्द्वराजयोगा रश्मिप्रभूता अपि नाभसाश्च ये कारकः पूर्णफलं हि पूर्णश्चन्द्रस्तु पत्री क्रियते यदीया
१९ पूर्णो भवेत् ये किल जन्मपत्री कुतूहलेन क्रियते यथोक्ता तस्यान्वये सत्कमला सलीलं सुनिश्चला तिष्ठतु दीर्घकालम् २० कृतमथानेदकपक्षसाधनं नृपेश्वरा
चाधिनदीं कु साधनम् परोपदिष्टात् समयात्प्रयत्नतः शुभाशुभं जन्मफलं मयोच्यते २१ अथ सांहितिकाभिप्रायेण पंचांगफलानि निरूप्यंते तत्रादौ संवत्सरफ
लानि ॥ ॐ ॥ सर्ववस्तुपरिसंग्रहे रतः पुत्रसंततिरतीव सन्मतिः सर्वभोगयुतदीर्घजीवितो जायते प्रभवसंभवः पुमान् १ उत्पन्नभोगः प्रियदर्शनश्च बला
धिशोनीच तुरः कलाज्ञः राजाप्रवेदात्मकुलसुशीलो विद्वन्मनुष्यो विभवाब्दजन्मा २ सदा सहर्षोऽतितरामुदारः सत्पुत्रदारैर्विभवैः समेतः सद्भाग्यविद्याविनयोप
पन्नो नूनं पुमान् शुक्लसमुद्भवः स्यात् ३ दाता सुतानंदयुतोऽतिकांतः सत्त्येन नित्यं सहितो गुणी स्यात् दक्षश्च धूर्तः परकार्यकर्त्ता प्रमोदजन्मा मनुजोऽभिमानी
४ दाराभिमानः सुतरां दयालुः कुलानुरक्तः किल चारुशीलः देवद्विजार्चाभिरतो विनीतो मर्त्यः प्रजाधीशसमुद्भवः स्यात् ५ कांतः सुखी भोगयुतश्च मानी प्रियवक्ता
बहुपुत्रयुक्तः सुपुष्टबुद्धिः खलु येन जीवेन्नरोऽभिराववत्सरसंभवः स्यात् ६ श्रीमान्प्रतापी वकुशास्त्रवेत्ता सुहृत्प्रियश्चारुमतिर्बलीयान् सत्कीर्तियुक्तो नितरां सु
रूपो भवेन्नरः श्रीमुखसंभवोऽसौ ७ प्रशस्तचेताः सुतरां यशस्वी गुणान्वितो दानरतो विनीतः सदा सहर्षोऽभिमतो बहूनां भावाभिधाने भवमानवः स्यात् ८ प्रसन्नरू
र्निर्गुणवान्विनीतः शांतश्च दानाभिरतो नितांतम् सुखी चिरायुर्दृढदेहशाली जातो युवाब्दे पुरुषः सतोषः ९ सर्वलोकगुणगौरवयुक्तः सुंदरोऽप्यतितरां गसभक्तः

शिल्पशास्त्रकुशलश्च सुशीलो धातृवत्सरभवो हि नरः स्यात् १० तत्कालसंजातमहाप्रकोपो हर्षाभियुक्तो गुणवान्प्रतापी दक्षः कलाकौशलशीलशाली मर्त्यो भवेदी
श्वरजातजन्मा ११ आचारदक्षः क्षितिपालमानी दानाभिमानी ननु शास्त्रवेत्ता बहुप्रकारैर्बहुधान्यवित्तः स्यान्मानवो वै बहुधान्यजन्मा १२ रथध्वजच्छत्रतुर
गमाश्वैर्युतश्च शास्त्राभिरतो ऽरिहंता मंत्री नरेंद्रस्य नरः श्रुतज्ञः प्रमाथिसंवत्सरसंभवः स्यात् १३ अत्युग्रकर्माभिरतो नितांतमरातिचक्राक्रमणे ऽतिदक्षः शू
रश्च वीरो ऽतितरां सुदारः पराक्रमी विक्रमवर्षजातः १४ कार्यप्रलापी किल निंद्यशीलः खलानुयातः परकर्मकर्त्ता भर्त्ता बहूनां मलिनो ऽलसश्च जातो वृषाब्दे
मनुजो ऽतिलुब्धः १५ चित्रवस्त्रकुसुमैकमानसो ऽद्भुतवचयान्वितः सदा। चारुशीलकिलसत्कलान्वितश्चित्रभानुजजनो हि सुरूपः १६ सुपलकेशः सुरूपः सु
कांतिर्जितारिपक्षो मतिमान्विनीतः प्रसन्नमूर्तिर्विलसादेभतिः सुभानुसंवत्सरजो नरः स्यात् १७ धूर्तश्च मूर्खश्चपलः कलाज्ञः सुनिष्ठुरो गर्हितकर्मकर्त्ता उत्पन्न
शोकाद्द्रविणेन मुक्तः स्यात्तारणाब्दोद्भवमानवो ऽयः १८ स्वधर्मकर्माभिरतो नितांतं सच्छास्त्रपारंगमनामुदामुपेतः कथाकलापे कुशलो विलासी पार्थिवाब्दे कुल
पार्थिवः स्यात् १९ सौख्यातिरिक्तो व्यसनाभिभूतो भीतो न किंचित् ग्रहणादृणी स्यात् जातः पुमानस्थिरचित्तवृत्तिर्व्ययाभिधाने व्ययकर्मशीलः २० राजांगौरवम
होत्सव भुवि मानवः स्युस्तनुर्महामतिः वैरिवर्गविजयोद्यतः सदा सर्वजिच्छरदि यस्य संभवः २१ भूरिभृत्यबहुभोगसंयुतः सुंदरश्च [illegible] कुरुसदा धीरता
गुणयुतो ऽतिपूर्णः सर्वधारिणि च यस्य संभवः २२ वक्ता विदेशाटनतां प्रपन्नः कुटुंबसौख्यापचयो ऽतिधूर्तः जनेन सार्कं मतसत्त्वहता विरोधिवर्षप्रभवो न
रः स्यात् २३ निर्धनः किलकरालतां गतो दीर्घपूर्ववहुगर्वसंयुतः चारुबुद्धिरहितो ऽप्यसौ तद्दोमानवो विकृतिवर्षसंभवः २४ कामातुरो भूत्सुकायकांतिः कठो
रदीर्घस्वरफल्गुवाक्यः क्लेशी च लज्जाविधिवर्जितः स्यान्नरः खराब्दप्रभवो ऽतिदीर्घः २५ तडागवापीगृहकूपकर्त्ता सदान्नदानाभिरुचिः शुचिः स्यात् विला
सिनो नंदनजातहर्षो नरो भवेन्नंदनवर्षजन्मा २६ संग्रामधीरः सततं सुशीलो भूपालमान्यो वदतां वरेण्यः दाता दयालुः किल वैरिहंता यस्य प्रसूतिर्विजयाभिधाने
२७ शास्त्रप्रसंगो विदुषां विवादी मान्यो वदान्यो ऽरिपुगर्वहंता जयाभिलाषी विषयातुरश्च जातो जयाब्दे मनुजो महौजाः २८ भूषाविशेषैः सहितः [illegible] विलासिनी
लो ऽनृतवाक्कलाज्ञः सङ्गीतनृत्याभिरतश्च भोक्ता यो मन्मथाब्दे जननं प्रपन्नः २९ क्रूरप्रवृत्तो नितांतमतिश्च [illegible] स्यात् विद्वद्भावो बहुदुष्टचेष्टः

५० पिंगेऽल्पणोगर्हितकर्मकर्त्तास्याद्दुद्धतश्चंचलवैभवाख्याः त्यागीशठोऽत्यंतकठोरवाक्योजातोनरःपिंगलनामधेये ५१ अनल्पजल्पःप्रियतामुपेतस्सलसाधु
बुद्धिर्विधिनावियुक्तः कलिप्रसंगेकिलकालरूपोयःकालयुक्तप्रभवःकृशांगः ५२ उदारचेताविलसत्प्रसादोरणांगणप्राप्तयशाःसुवेषः नरेंद्रमंत्रीवरपूजितास्सिद्धार्थे
जातोमनुजःसमर्थः ५३ भयंकरःपालयिताचक्रूनांनाश्वसरीवादपरोऽतिधूर्तः जातापकीर्त्तिःखलुचित्तवृत्तिर्नरोऽतिरौद्रःखलुरौद्रजन्मा ५४ स्ववाक्यनिर्वाह
महाभिमानःप्रसन्नताहीनतरोनरःस्यात् कार्याप्रकामंदुरितप्रवृत्तिर्योदुर्मतिर्दुर्मतिवर्षजातः ५५ नित्यंनरेंद्रादरगौरवःस्यात्गजाश्वम्हेमसमन्वित
श्च तीर्थत्रिकप्रीतिरतीवजातश्चेन्मानवोदुंदुभिनामधेये ५६ आरक्तास्यःक्वचिदपिमह्यःकामलालाससभयानांप्रादुर्भावादतिकृशतनुर्जायतेऽत्यंतरोषः पाददु
द्रुमवतिकुनरखोहस्तयुग्मेऽथवास्यात्स्वल्पोदुःखवजातेरुधिरोद्गारिजन्मामनुष्यः ५७ आचारधर्माभिरतोनितांतंमनोभवोत्कर्षतरोनरःस्यात् अन्याधिकार्ये
सहनतेकिंचिद्रक्ताक्षिजातोक्षिरुजान्वितश्च ५८ स्यादंतरायोहिपरस्यकार्येतमागुणाधिक्यभयंकरश्च परस्यवुद्धिंप्रहरेत्प्रकामंयोहायनेक्रोधननाम्निजातः ५९
उपार्जितार्थव्ययकृन्नितांतंसेवारतोनिष्ठुरचित्तवृत्तिः सत्कर्मताल्पत्वमनःप्रवृत्तिःक्षयाभिधानेजननंहियस्य ६० इतिश्रीदैवज्ञदुंढिराजविरचितेजातकाभर
णेसंवत्सरफलानि॥ अथायनफलानि शश्वत्प्रसन्नान्तनुसूनुकांतायुक्तोऽतितरांचिरायुःनरःसदाचारपरोऽत्युदारोधीरश्चसौम्यायनजातजन्मा १ अरक्तगर्वः
कृषिकर्मकर्त्ताम्बुप्रदायोऽतिकठोरचित्तः शठोऽथसद्योननुमानवानांयाम्यायनेनाजननप्रपन्नः २। १ इत्ययनजातफलम् अथर्तुफलम् कंदर्परूपोमतिमानप्र
तापीसंगीतशास्त्रेगणितेप्रवीणः शास्त्रप्रसूतामलचेतनश्चेतावसंतजन्मामनुजःप्रसन्नः १ ऐश्वर्यविद्याधनधान्ययुक्तोवक्ताप्रवक्ताकेप्रयाशाः भोगीभवेन्नीरवि
हारशीलोग्रीष्मकालोद्भवतांप्रपन्नः २ संग्रामधीरोमतिमान्प्रतापवित्तुरंगमप्रेमकरःसुरूपः कफानिलात्मालजनाविलासीवर्षोद्भवोवैपुरुषः ३ अपूर्णरोषःपुरु
षानिलात्मामानीधनोधर्मरुचिःशुचिःस्यात् रणप्रियोवाहनसंयुतश्चशरत्तोशैरन्नाम्नवयस्यजन्म ४ नरेंद्रमंत्रीत्वतुरोऽप्युदारोनरोभवेच्चारुगुणोपपन्नः सत्कर्म
धर्मानुरक्तोमनस्वीहेमंतजातःसततंविनीतः ५ मिष्टान्नपानानुरतोनितांतस्सुधान्वितःपुत्रकलत्रसौख्यः सत्कर्मवेषःपुरुषःसरोषोवलाधिपत्यःशिशिरर्तुजन्मा
इतिऋतुफलम् अथमासफलम् सत्कर्मविद्याविनयोपपन्नोभागीनरःस्यान्मधुरान्नभोजी सत्पात्रमित्रानुरतश्चमंत्रीचैत्रोद्भवश्चापिविचित्रमंत्रः १ सुलक्ष्मा

पुण्यगुणानुशीलः पुमान्बलोपान्द्विजदेवभक्तः कार्मान्विरायुर्जलयानशीलः स्यान्माधवे बाधवसौख्ययुक्तः २ क्षमान्वितश्चचलवित्तवृत्तिर्वेदेशवासाभिरुचिश्च
तीव्रः विचित्रबुद्धिः खलु दीर्घसूत्रो ज्येष्ठोद्भवः श्रेष्ठतरो नरः स्यात् ३ बहुव्ययो नल्पवचोविलासः प्रमादशीलो गुरुवत्सलश्च सदाग्निमांद्यः शुभकर्मकृत स्याद
षाढजो द्राढतराभिमानः ४ पुत्रैश्चपौत्रैश्चकलत्रमित्रैः सुखीचतातस्यविदेशकर्त्ता लोकप्रसिद्धः कफवान्वदान्यो गुणान्वितः श्रावणमासजन्मा ५ श्रीमान्भवे
त्क्षीणकलेवरश्च सतावकांतासुतजातसौख्यः सुखेचदुःखेविकृतो हि मर्त्योभवेन्नरो भाद्रपदासजन्मा ६ विद्वान्धनीराजकुलप्रियश्चसत्कार्यकर्त्ता बहुभृत्ययु
क्तः दातागुणज्ञो बहुपुत्रसंपत्स्यादाश्विने श्वादिसमृद्धियुक्तः ७ सत्कर्मकर्त्ता बहुवाग्विलासी धनीलसत्कुचितर्कशापाशः कामस्तकामः क्रयविक्रयार्थी सत्कुलस्य
कार्त्तिकजातजन्मा ८ सत्तीर्थयात्रानिरतः सुशीलः कलाकलापे कुशलो विलासी परोपकारीताधृतसाधुमार्गो मार्गोद्भवो वैविभवैः समेतः ९ परोपकारीपि वित्तहीनः
कृशार्जितार्थव्ययकृद्विधिज्ञः सुगुप्तमंत्रः कृतशास्त्रयत्नः पौषेविशेषात्पुरुषः कृशांगः १० सन्मंत्रविद्दैहिकसाधुयोगो यागोक्तविद्याभ्यसनानुरक्तः वृद्धेविशेषान्निह
तारिसंधो माघोद्भवः स्यादनघो मनुष्यः ११ परोपकारी कुशलो दयालुर्बलान्वितः कोमलकायशीली विलासिनीकेलिविधानशीलोयः फाल्गुने फल्गुवचोविला
सः १२ क्षेपकः विषयहीनमतिः सुचरित्रहृक् विविधतीर्थकरश्च निरामयः सकलवल्लभ आत्महितंकरः खलु मलम्लुचमासभवो नरः ॥ इतिमासजातफल
म् ॥ अथपक्षजातफलम् ॥ चंचच्चिरायुः सुतरां सुशीलः श्रीपुत्रवान्कोमलकायकांतिः सदासदानंदविनीतकालश्चेज्जन्मकालस्तुबलक्षपक्षे १ प्रतापशीलोविकल
श्चलोलः कलिप्रियः स्वीयकुलोद्धतश्च मनोभवाधिक्ययुतो नितांतं सितेतरे यस्य नरस्य जन्म २ इतिपक्षफलम् ॥ अथदिनरात्रिफलम् तेजस्वीपि दसाद्गुणश्चारु
दृष्टिर्नृपप्रियः वधुपूज्योघनाढ्यश्चदिवाजातो नरो भवेत् १ मंददृग्बहुकामार्तः क्षयरोगी मलीमसः क्रूरात्माछन्नपापश्चनिशिजातो नरो भवेत् २ इतिदिवरा
त्रिफलम् अथतिथिफलम् बहुजनपरिवारश्चारुविद्याविवेकी कनकमणिविभूषावेषशाली सुशीलः अतिसुललितकांतिर्भूमिपालातान्वितः प्रतिपदियदि सूति
र्जायते यस्य जंतोः १ दातादयालुर्गुणवान्सुसंपच्चवत्सदाचारविचारधन्यः प्रसन्नमूर्तिर्बहुगीतकीर्तिर्मर्त्योद्वितीयातिथिसंभवः स्यात् २ कामाधिकः स्यादनवद्य
विद्याबलान्वितो राजकुलाप्तवित्तः ॥ प्रवासशीलश्चतुरो विलासी मर्त्यस्तृतीयाप्रभवोभिमानी ३ ऋणप्रदाता बहुसाहसः स्याद्रणप्रवीणः कृपणस्वभावः घूतेरतिर्यो

ज्ञा॰ भ॰
४

समनामनुष्योवादीयदिस्याज्जननेचतुर्थी ४ संपूर्णगात्रश्चकलत्रपुत्रमित्रान्वितोभूतदयान्वितश्च नरेंद्रमान्यस्तुनरोवदान्यः प्रसूतिकालेकिलपंचमीचेत
५ सत्यप्रतिज्ञोधनसूनुसंपद्धीरजानुर्मनुजोमहौजाः प्रकृष्टकीर्तिश्चतुरोवरिष्ठः षष्ठ्यांप्रजातोव्रणकीर्णगात्रः ६ ज्ञानोगुणज्ञोहिविशालनेत्रः सत्पात्र
देवार्चनचित्तवृत्तिः कन्याजनेतापरवित्तहर्तास्यात्सप्तमीजोमनुजोगरिष्ठः ७ नानासंपत्सुसौख्यः कृपालुः पृथ्वीपालप्राप्तविद्याविकारः कामाशीति
श्चचलाचित्तवृत्तिर्यस्याः ष्टम्यांजन्मचेन्मानवस्य ८ पराङ्मुखोवंधुजनस्यकार्येकठोरवाक्यश्चसुधीविरोधीनरः सदावागतादरः स्यात्तयस्यप्रसूतौनवमी
तिथिश्चेत् ९ धर्मैकबुद्धिर्भववैभवाढ्यः प्रलंबकंठोवहुशास्त्रपारी उदारचित्तोऽतितरांविनीतोरम्यश्चकामीदशमीभवः स्यात् १० देवद्विजार्चाव्रतदान
शालिः सुनिर्मलांतः करणः प्रवीणः पुण्यैकचित्तोत्तमकर्मकृत्स्यादेकादशीजोऽतिकृशोऽतिरोषः ११ जलप्रियोवैसहारशीलोनिजालयावासविलासशीलः
सदान्नदाताक्षितिपात्तवित्तः स्यात्द्वादशीजोमनुजः प्रजावान् १२ रूपान्वितः सात्विकताविधुक्तः प्रलंबकंठश्चनरप्रसूतिः नरोऽतिशूरश्चतुरः प्रकामंत्रयोद
शीनामतिथौप्रसूतौ १३ क्रूरोऽतिशूरश्चतुरः सहासः कंदर्पलीलाकुलचित्तवृत्तिः स्याद्दुः सहोऽत्यंतविरुद्धभाषीचतुर्दशीजः पुरुषः सरोषः १४ अतिमुललि
तकायोन्यायसंप्राप्तवित्तोवहुयुवतिसमेतोनित्यसंजातहर्षः प्रवरतरविलासोऽत्यंतकारुण्यपुण्यो गुणगणपरिपूर्णः पूर्णिमाजातजन्मा १५ शांतोमनस्वी
पितृमातृभक्तः कृपान्वितश्चप्रमदाप्रमेच्छः मान्योजनानांहतकांतिहर्षोदर्शोद्भवः स्यात्सुरुषः कृशांगः १६ इतितिथिफलं ॥ अथवारफलं ॥ श्लोकेवि।
जयेरणाग्रेरणमारुणः पित्तचयप्रकोपः ॥ दाताप्रमहोत्साहयुतोमहौजादिनेदिनेशस्यभवेन्मनुष्यः १ शांतः प्रशांतः प्रियवाक्यविधिज्ञः प्राश्वन्नरेंद्राश्रयरतिव
तीसुखेनदुःखेनसमस्वभावोवारेनरः शीतकरस्यजातः २ वक्रोक्तिरत्यंतरणप्रियः स्यान्नरेंद्रमंत्रीचधरोपजीवी सत्वान्वितस्तीव्रतरस्वभावोदिनेभवेच्चा
ऽवनिनंदनस्य ३ सद्रूपशालीमृदुवाग्विलासः श्रीमान्कलाकौशलतासमेतः वणिक्क्रियायांहिभवेदभिज्ञः प्राज्ञोगुणज्ञोत्तदिनोद्भवोयः ४ विद्वान्धनीसर्व
गुणोपपन्नोमनोरमः स्यात्पतिलब्धकामः आचार्यवर्यश्चजनप्रियः स्याद्दारेगुरोर्यस्यनरस्यजन्म ५ सुमीनसत्कुवितके सपाशः प्रसन्नवेषोमतिमानविशेषात्श
क्रावरमीतियदोनरः स्यात्सन्मार्गगोमार्गववारजन्मा ६ अकालसंप्राप्तजराप्रवृत्तिर्विलोक्षितोदुर्वलदेहयष्टिः तमोगुणीक्रोधवशाभिभूतः शनैर्दिनेजातमनुष्यः

रम॰
४

७ इतिवारफलम् अथनक्षत्रफलम् सदैवसेवाभ्युदितोविनीतःसत्यान्वितःप्राप्तसमस्तसंपत् योषाविभूषात्मजभूरितोषःस्यादश्विनीजन्मनिमानवस्य १ स
दापकीर्तिर्हिंसकापवादैर्नानाविनोदैश्चविनीतकालः जलातिभीरुश्चपलःखलश्चप्राणीप्रणीतोभरणीभजातः २ क्षुधाधिकःसत्यधनैर्विहीनोवृथाटनोसन्नम
तिःकृतघ्नः कठोरवाग्गर्हितकर्मकर्तास्याद्बहुलाजन्मनियस्यजंतोः ३ धर्मकर्मकुशलःकृषीबलश्चारुशीलविलसत्कलेवरः वाग्विलासकलितासि
लाशयोरोहिणीभवतियस्यजन्मभम् ४ शरासनाभ्यासरतोविनीतःसदानुरक्तोगुणिनांगुणेषु भोक्तानृपस्नेहभरेणपूर्णःसन्मार्गगःसोमृगजातजन्मा ५
क्षुधाधिकोऽस्वशरीरकांतिर्वधुप्रियःकोपयुतःकृतघ्नः प्रसूतिकालेचभवेत्किलार्द्रोदयार्द्रचेतानभवेन्मनुष्यः ६ प्रभूतमित्रःकृतशास्त्रयत्नःसद्रत्नचा
मीकरभूषणाढ्यःदातामतापीवसुधावसुश्चपुनर्वसुर्यस्यभवेत्प्रसूतौ ७ प्रसन्नगात्रःपितृमातृभक्तःस्वधर्मसक्तोविनयाभियुक्तःभवेन्मनुष्यःखलुपुष्यज
न्मासन्माननानाधनवाहनाढ्यः ८ वृथाऽटनःस्यादतिदुष्टचेष्टःकष्टप्रदश्चापिवृथाजनानां सार्पेसदर्पोहिरथापितर्थैः कंदर्पसंतप्तमनामनुष्यः ९ ॥
कठोरचित्तःपितृभक्तियुक्तस्तीव्रस्वभावस्त्वनवद्यविद्यः चेज्जन्मभयस्यमघाऽनघःसन्मतिःसदाऽरातिविघातदक्षः १० भूरत्नत्यागीसाहसीभूमिभर्ताकामा
र्तोऽपिस्यात्किलपाल्योतिदक्षः धूर्तःक्रूरोऽत्यंतसंजातगर्वःपूर्वाफल्गुन्यस्तिचेज्जन्मकाले ११ दातादयालुःसुतरांसुशीलोविशालकीर्तिर्नृपतिप्रधानः धीरो
नरोऽत्यंतमृदुर्नरःस्यात्चेदुत्तराफल्गुनिकाप्रसूतौ १२ दातामनस्वीसुतरांयशस्वीभूदेवदेवार्चनकृत्प्रयत्नः प्रसूतिकालेयदियस्यहस्तोहस्तोद्गतातस्यस
मस्तसंपत् १३ प्रतापसंतापितशत्रुपक्षोनयेतिदक्षश्चविचित्रवासः प्रसूतिकालेयदियस्यचित्रावुद्धिर्विचित्राखलुतस्यशास्त्रे १४ कंदर्परूपःप्रभयास
मेतःकांतापरप्रीतिरतिप्रसन्नः स्वातीप्रसूतोमनुजस्ययस्यमहीपतिप्राप्तविभूतियुक्तः १५ सदानुरक्तोऽग्निसुरक्रियायांधातुक्रियायामीपवोग्रसौम्यः ॥ य
स्यप्रसूतौत्वभवेद्विशाखासखानकस्यापिभवेन्मनुष्यः १६ सत्कांतिकीर्तिश्चसदोत्सवःस्याज्जेतारिपूर्णांचकलाप्रवीणः स्यात्संभवेयस्यकिलानुराधासंपद्वि
शालाविविधाव्रतस्य १७ सत्कीर्तिकांतिर्विभुतासमेतोवित्तान्वितोऽत्यंतलसत्प्रतापः श्रेष्ठप्रतिष्ठोवदतांवरिष्ठोज्येष्ठोद्भवःस्यात्पुरुषोविशेषात् १८ अथमू
लविचारः मूलविरूद्धावयवंसमूलंकुलंहरत्येववदंतिसंतः चेदन्ययासत्कुरुतेविशेषात्सौभाग्यमायुश्चकुलाभिवृद्धिम् १९ ज्येष्ठांत्यघटिकैकाचमूलस्या

घघटीद्वयम् अभुक्तमूलमितियुक्तं तत्रोत्पन्नशिशोर्मुखम् २० अष्टवर्षाणि नालोक्यं तातेन शुभमिच्छता तद्दोषपरिहारार्थं शान्तिकाप्रोच्यतेऽधुना २१ रत्नैः ज्ञातौ
षधीमूलैः सप्तमृद्भिः प्रपूरयेत् शतच्छिद्रो घटस्तस्मान्निःसृतेन जलेन हि २२ बालकं वा पितृस्नाने विप्रैः संपादिते सति जपहोमप्रदानेन कृते स्यान्मंगलं ध्रु
वम् २३ विरुद्धावयवे मूले विधिरेवं स्मृतो बुधैः मुनीनां वचनं सत्यं मतं क्षेममभीप्सुभिः २४ मूलस्य पादत्रितये क्रमेण पितुर्जनन्याश्च धनस्य रिष्टं चतुर्थ
पादः शुभदो नितांतं सार्पे विलोमं परिकल्पनीयं २५ इतिमूलचरणफलम् कृष्णोत्तृतीयाद्दशमीवलक्षभूतो महीजार्किबुधैः समेतः चेज्जन्मकाले किल य
समूलमुन्मूलनं तत्कुरुते कुलस्य २६ दिवासायं निशि प्रातस्तातस्य मातुलस्य च पशूनां मित्रवर्गस्य क्रमान्मूलमनिष्टदम् २७ इतिमूलवेलाफलम् ॥
अथ पुरुषाकृतौ मूलाश्लेषाफलम् मूर्ध्नि पंच मुखे पंच स्कंधयोर्घटिकाष्टकं गजाश्वभुजयोर्युग्मं हस्तयोर्हृदयेऽष्टकम् २८ युग्म २ नाभौ दिशो गुह्ये षट् ६ जान्वोः प
द् ६ नृपाद्वयोः विन्यस्य पुरुषाकारे मूलस्य फलमादिशेत् २९ छत्रलाभ शिरोदेशे वदने पितृघातनम् स्कंधयोर्वृषहस्तं च बाहुयुग्मे तु कर्मकृत् ३० हत्याकरः
करद्वंद्वे राज्यप्राप्तिर्हृदये भवेत् अल्पायुर्नाभिदेशे च गुह्ये च सुखमद्भुतम् ३१ जंघायां भ्रमणप्रीतिः पादयोर्जीवितात्पता घटीफलं किलप्रोक्तं मूलस्य मुनि
पुंगवैः ३२ विज्ञेयं विबुधैः सर्वं सार्पे तत्र विपर्ययात् इतिपुरुषाकृतौ मूलाश्लेषाफलम् अथ मूलाश्लेषामुहूर्त्तफलम् राक्षसो यातुधानश्च सोमः शक्रः फणी
श्वरः पितामहस्तथा यमः कालो विश्वेदेवा महेश्वरः ३३ शर्वास्यश्च कुबेरश्च शक्रो मेघो दिवाकरः गंधर्वो यमदेवश्च ब्रह्माविष्णुयमस्तथा ३४ ईश्वरो विष्णुर
श्च पवनो मुनयस्तथा षण्मुखो भृंगिरिटीच गौरीनाम्नी सरस्वती ३५ प्रजापतिश्च मूलस्य त्रिंशद्वै क्षणनायकाः विपरीताः पुनर्ज्ञेया आश्लेषाजातबाल
के ३६ प्रथमेह्नित्तयेषश्रेष्ठाःस्मेऽशादशातया त्रयोविंशच नवमे कुलक्षयकरः शिशुः ३७ इतिमूलाश्लेषामुहूर्त्तफलम् अथ मूलवृक्षफलम् वेदाः
सप्त ७ गजाः ८ काष्ठाः १० खेटाः ९ बाणा ५ श्च षट् ६ शिवाः ११ मूलस्तंभत्वचः शाखापत्रपुष्पफलं शिखा ३८ मूलवृक्षविभागेषु मंगलं हि फले दले ॥
अमंगलफलं विद्याच्छेषभागेषु निश्चितम् ३९ इतिमूलवृक्षफलम् पादे मुहूर्त्ते वेलायां वृक्षे च पुरुषाकृतौ अनिष्टमशुभाधिक्ये शुभाधिक्ये शुभं फलम् ॥
४० तातस्य जन्मभे यस्य प्रसूतिर्जायते यदि भ्राता वा भ्रातरं ज्येष्ठं रिष्टं साकुरुते ध्रुवम् ४१ मूलवच्छान्तिकं तत्र विधेयं हि विचक्षणैः भूमिरत्नानि हेमान्नं देयं

विप्रेषुभक्तितः ४२ सुखेनयुक्तोधनवाहनाढ्योहिंस्रोबलाढ्यः स्थिरकर्मकर्त्ता मतापितारातिजनोमनुष्योमूलेकृती स्याज्जननेप्रपन्नः ४३ भूयोभूयलो
यपानानुरक्तोभोक्ताचवहुविलासः सुशीलः नूनंसंपज्जायतेतस्यगाढापूर्वाषाढाजन्मभेयस्यपुंसः ४४ ज्ञातादयावान्विजयीविनीतः सत्कर्मकर्त्ता
विभुतासमेतः कांतासुतावाप्तसुखोवितांतवैश्वेसुवेषः पुरुषोऽभिमानी ४५ अतिसुललितकांतिः संमतः सज्जनानामनुभवतिविनीतश्चास्यकीर्त्तिःसु
रूपः॥ द्विजवरसुरभक्तिर्व्यक्तवाक्मानवःस्यादभिजित्तियदिस्थितिर्भूपतिः सः स्ववंशे ४६ शास्त्रानुरक्तोवहुपुत्रमित्रः संसात्रभक्तिर्विजिवारिपुक्षः
माणोपुराणश्रवणप्रवीणश्चेज्जन्मकालेश्रवणाहियस्य ४७ आचाररताताद्रवारुशील्वोधनाधिशालीवलवानकृपालुः यस्यप्रसूतौश्रवभंसधनिष्ठा
महाप्रतिष्ठासहितोनरःस्यात् ४८ शीतभीरुरतिसाहसीसदानिष्ठुरोहिचतुरोनरोभवेत् वैरिणामतिशयेनदारुणोद्रुयदिस्यस्यशतभ्रवे ४९ जितेंद्रियः
जितेंद्रियःसर्वकलासुदक्षोजितारिपक्षः खलुतरयनित्यम् भवेन्मनीषासुतरामपूर्वापूर्वायदाप्रसूतौ ५० कुलस्यमध्येऽधिकभूषणंनासुसुदेहः
शुभकर्मकर्त्ता यस्योत्तराभाद्रपदाचजन्यांधन्यालभेन्मांचभवेहदान्यः ५१ चारुशीलविभवोजितेंद्रियःसद्ध्नानुभवनेकमानसः मानवोनुभवेना
हामतीरेवतीभवतियस्यजन्मभम् ५२ इतिनक्षत्रजातफलानी अथरहज्जातकोक्तनवांशफलम् विनीतोधर्मशीलश्चसत्यवादीदृढव्रतः वि
द्यावान्सुशीलश्चजायतेप्रथमांशके १ उत्पन्नविभवोभोक्तासंग्रामेषुपराजितः गंधर्वप्रमदासक्तोजायतेद्वितीयांशके २ स्त्रीजितश्चानपरसश्चमा॰
यायुक्तोऽल्पवीर्यवान् वीरीवयाविचारज्ञोजायतेतृतीयांशके ३ वहुस्त्रीसुभगःपूज्योजलसेवीधनान्वितः नृपसेव्यश्चवाग्मीसचतुर्थांशेप्रजायते
४ वहुमित्रजनामात्योवंधुपुत्रसुखान्वितः महत्प्रतिष्ठामाप्नोतिसंजातःपंचमांशके ५ जितवैरिगणोवीरोदृढसौहृदकारकः जायतेमउत्साधीशोकः
षष्ठांशकोद्भवः ६ अत्याहतात्रः सर्वत्रपृथ्वीनाथःकलप्रतः सेनापतित्वमाप्नोतिसंजातःसप्तमांशके ७ उदारधीःक्षितिख्यातोधनधान्यसमोदितः
कोपिदुर्जनतत्रागोनरोजातोऽष्टमांशके ८ इतिवरहज्जातकोक्तनवांशकफलानि अथकमपामानिपुराणितैर्लिखितानि शाश्वत्कांतापुत्रमित्रादिसौ
ख्यंस्वातंत्र्यंस्यात्सर्वकार्यप्रसंगे चंचद्देहोतातदनेमानसंचेद्विष्कंभेवैसंभवोयस्यजंतोः १ वक्ताचवहूयसंपत्तियुक्तोदातात्यंतंस्यात्सुस्वाननश्च जातानदः

सद्विनोदप्रसंगाद्धर्मप्रीतिः प्रीतिजन्मामनुष्यः २ अर्थात्सर्यसाहसैरन्वितश्च नानास्थानोद्यानगानप्रवृत्तिः यस्यायुष्मान्तंभवे संभवेद्वै स्याद्वायुष्मान्मानवो
मानयुक्तः ३ ज्ञानीधनीसत्सपरायणः स्यादाचारशीलोबलवान्विवेकी सुसाध्यसौभाग्यविराजमानः सौभाग्यजन्माहि महाभिमानी ४ सत्वरोऽतिचतुरः
सदुत्तरश्चारु गौरवयुतश्च सन्मतिः नित्यशोभनविधानतत्परः शोभनोभवति शोभनोद्भवः ५ सदामदोपेगलरुक्सरोषोविशालवक्षांघ्रिरतीवधूर्तः कृशि
प्रियोदीर्घहनुर्मनुष्यः पाखंडिकः स्यादतिगंडजातः ६ त्वरः सदासर्वकलाप्रवीणः ससाहसोत्साहसमन्वितश्च परोपकारीसुतरांसुकर्मा भवेत्सुकर्मा प्रसू
तिकाले ७ प्राज्ञोवदान्यः सततंप्रहृष्टः श्रेष्ठः सभायांचपलः सुशीलः नयेनयुक्तोनियमेनयस्याधृत्याह्वयेयस्यनरस्यजन्म ८ नरोहतिशूलमथसुसुतश्च
सत्कर्मविद्याद्विनयेविरक्तः यस्यप्रसूतिर्यदिशूलयोगेशूलप्रयात स्यभवेत्कदाचित् ९ धूर्तः सुतत्कार्यपरः सुखप्रवक्तृ शीविशेषात्कुरुपस्वभावः गंडेभवेः
च्चगंडः प्रचंडकोपः पुरुषः प्रदीप्तः १० सुसंग्रहप्रिति रतींवदेशाधनान्वितः स्यात्क्रयविक्रयाभ्याम् प्रसूतिकालेयदियस्यवृद्धिः शास्त्राभिवृद्धिर्नियमेनतस्य
११ निश्चलाहिकमलासराऽलयेसंभवेच्चवदनेसरस्वती चारुकीर्त्तिरपिवेश्मवंतवावेश्म योमवतियस्यसंभवे १२ कृतोल्पदृष्टिः कृपयाविहीनोमहात्मनुः
स्यादपवादवादी असत्यताप्रीतिरतीवमर्त्यो व्याघातजातः खलु घातकर्त्ता १३ सुस्निग्धगात्रः कृतशल्ययत्नः सुरत्नधृपावकसनानुरक्तः प्रसूतिकालेयदि
हर्षणाख्येमानवोवैरिपुकर्षणः स्यात् १४ सुधीःसुबंधुर्गुणवान्महौजाः सत्यान्वितोरत्नपरीक्षकः स्यात् वज्रंभवेयस्यचवज्रयोगः संपन्नयुक्तोसामध्यणा
व्यः १५ वरान्वितश्चतुरः सुशीलः शास्त्रादरः सारविराजमानः प्रसूतिकालेयदियस्यसिद्धिर्भाग्याभिवृद्धिः सततंहितस्य १६ उदारबुद्धिः क्रियात्मा
क्येगदार्तमूर्तिश्चकरोऽर्थचिंतः परस्यकार्येव्यतिपाततुल्योनरः खलुस्यातव्यतिपातजन्मा १७ उत्पन्नमोक्षाक्रियोपपन्नोऽल्पताप्रमत्सरत्नास्मितश्च
मंसोजन्यतपोवरीयान्भवेद्वरीयान्प्रभवोहियस्य १८ असत्यसाक्षीमतिभूर्बहूनांभक्षात्मकर्मासमप्रविहीनः दृशोल्पभसोविवृतोऽपिपचाशद्धर्मपीपरि
रिघोद्भवःस्यात् १९ सन्मंत्रशास्त्राभिरतोनितांतंजितेंद्रियश्चारुशरीरयष्टिः योगःशिवोजन्मनियस्यजंतोः सदाशिवंतस्यशिवप्रसादात् २० जितेंद्रियः
सत्सपरोऽतिगौरः सर्वेषुकार्येष्वतिकोविदश्च भवेच्चसूतोयदिसिद्धियोगः सिध्यंतिकार्याणिकृतानितस्य २१ क्लेशिविनीतश्चतुरः सहासः सत्कर्मरक्षाजितशत्रुपक्ष

मन्त्रमविद्याविधिनैवसर्वैःसंसाधयेत्तात्प्रभवोहिदक्षः २२ शुभप्रचारः शुभवाग्विलासः शुभस्यकर्ताशुभलक्षणश्च शुभोपदेशांकुरुतेनराणांयस्यप्रसूतौशुभनाम
योगः २३ जितेन्द्रियः सत्त्ववतांमहौजावाग्वादसंग्रामजयाभ्युपेतः सन्मानमुक्तांवरधारणेच्छुः शुक्लोद्भवोवैभवसंयुतः स्यात् २४ विद्याभ्यासेप्रीतिरत्यंतवेत्ता
निःसंसत्साचारजातादरश्च शांतोदांतोजायतेचारुकर्मान्नह्मायोगः संभवेयस्यपुंसः २५ प्रातीवलोपानविपुलामलश्रीयुक्तः कलालाहिभवेन्महौजाः नि
जान्वयेवैमनुजोनरेंद्रस्तैंद्रोद्भवश्चारुतरप्रभावः २६ चंचलश्चकुटिलः खलमैत्रः शास्त्रभक्तिरहितोहतचित्तः साध्वसेमनसितस्यनोधृतिर्वैधृतिर्भवतिय
स्यजन्मनि २७ इतियोगफलानि अथकरणफलम् कामोद्यालुर्बलावान् सुशीलोविचक्षणः शीघ्रगतिः सुभाग्यः ववाभिधानेजननंहियस्यमानाविधान
स्यभवेत्सुखवत् १ सूरताऽतिविलसद्बलवत्तासंयुतोभवतिचारुविलास काव्यकृद्वितरणप्रणयश्चेद्बालवेऽमलमतिश्चकलाज्ञः २ कामोपगःस्त्रीभोगभिमती
कृतांनूनंस्ततेयोवकुमित्रसौख्यः बलान्वितःकोमलवाग्विलासः श्रेष्ठःकुलेकौलवजातजन्मा ३ चारुकोमलकलेवरशालीकेलिलालसमनाश्चकलाज्ञः वाग्विलास
कुशलोऽतिसुशीलस्तैतिलेविमलधीश्चलरक् स्यात् ४ परोपकारेविहितादरश्चविचारसारश्चतुरोजितारिः शूरोऽतिधीरःसुतरामुदारोगरेनरश्चारुकलेवरश्च ५
कलाप्रवीणः सुतरांसहासः प्राज्ञोहिसन्मानसमन्वितश्च प्रसूतिकालेवणिजंहियस्यवाणिज्यतोऽर्थागमनंहितस्य ६ चारुवक्त्रचपलोबलशालीहृष्टधीऽसिद्धी
द्रोहिकुलश्च जायतेस्खलमतिर्बहुनिद्रायस्यजन्मसमयेखलुभद्रा ७ अतिसुललितबुद्धिर्मंत्रविद्याविधानेगुणगणसमवेतःसर्वदासावधानः ननुजननकृतसंख्यः
सर्वतोऽस्याभियुक्तोभवतिशकुनजन्माशाकुनज्ञानशीलः ८ नरः सदाचारपराङ्मुखः स्यादसंग्रहः क्षीणशरीरयष्टिः चतुष्पदेयस्यभवेत्प्रसूतिश्चतुष्पदात्सख
युतोमनुष्यः ९ दुःशीलवक्रचलनोबलवान् खलात्माकोपानलाहतमतिः कलिकृत्[illegible] द्रोहाकुलक्षयमवेदतिदीर्घकालेजातोहिनागकरणेरणरंगधीरः १० प्र
मैऽप्यधर्मेसमतामतेः स्यादंगेऽप्यनंगोविवलत्वमुच्चैः मैत्र्यममैत्र्यांस्थिरतानकिंचि[illegible]स्तुघ्नजातस्यहिमानवस्य ११ इतिकरणफलम् अथगंडांतफलम् ॥
पौष्णादिगंडांतभवोहिमर्त्यः क्रमेणपित्रोरशुभोऽग्रजस्य जातस्यसत्यंत्रिविधप्रजातः सर्वाभिघातंकुरुतेवदंति इतिगंडांतफलम् अथगणफलम् सुखर
श्चसरलोऽतिमतिः स्याद्लाभोजनकरोहिनरश्च जायतेसुरगणेऽन्यगुणज्ञः सज्जनार्गितगुणोद्रविणाढ्याः १ देवद्विजार्चाभिरतोभिमानीधनीदयालुर्बलवाक

लातः प्राज्ञः सुकांतिः सुखदो वहूनां मर्त्यो भवेन्मर्त्यगणे प्रसूतः २ अनल्पजल्पश्च कठोरचित्तः स्यात्साहसी क्रोधपरो हतश्च दुःशीलवृत्तः कलिकृद्भवेत्तो यो र
क्षोगणोत्पन्ननरो विरोधी ३ इति गणफलम् अथ लग्नफलम् चंडाभिमानी गुणवान्सकोपः सुहृद्विरोधी च सुखापरेषाम् पराक्रमप्राप्तयशो विशाविशेषो
मेषोदये यः पुरुषोऽतिरोषः १ गुणाग्रणीः स्याद्द्रविणेन पूर्णो भक्तो गुरूणां हिरण्यप्रियश्च धरिश्च भूरिः प्रियवाक्प्रशांतः स्यात्पूरुषो यस्य वृषे विलग्ने २ भो-
गी वदान्यो बहुपुत्रमित्रः सुगूढमंत्रः सधनः सुशीलः तस्य स्थितिः स्यान्नृपसन्निधाने लग्ने भवेन्नाम्नि युनाभिधाने ३ मिष्टान्नभुक्साधुरतो विलोमबुद्धिर्जे-
लकेलिशीलः प्रकृष्टसारोऽतितरां सुदारो लग्ने कुलीरे हि नरो भवेत्तः ४ कृशोदरश्चारुपराक्रमश्च भोगी भवेदल्पसुतोऽल्पभक्षः संजातबुद्धिर्मनुजोऽभिमा-
नी पंचाननेसंजननेविलग्ने ५ कामक्रीडासद्गुणज्ञानसत्त्वकौशल्याद्यैः संयुतः सुप्रसन्नः लग्नेकन्या यस्य जन्यासधन्योकन्याप्राप्तीः श्वेरवा प्रोतिनित्यं ६ ।
गुणाधिकत्वं द्रविणोपलब्धिर्वाणिज्यकर्मण्यतिनैपुणत्वम् प्रयालयाताद्विलयेन सौख्यालयं तुलाचेत्स कुलावतंसः ७ शूरो नरोऽत्यंतविचारसारोऽनवद्य-
विद्याधिकतासमेतः प्रसूतिकालेकिललग्नशालीभवेदलिस्तस्य कलिः सदैव ८ प्राज्ञश्च राज्ञः परिसेवनज्ञः सत्यप्रतिज्ञः सुतरां मनोज्ञः सूक्तः कलाज्ञश्च ध-
नुर्विधिज्ञश्चेन्नु धनुर्यस्य जनुर्जनुः स्यात् ९ कठिनमूर्तिरतीवशठः पुमान्निजमनोगतकृद्वहुसंततिः सुचतुरोऽपि च लुब्धतरो वदेत्यदि नक्रमकरोदयसंभवः १०
लोलस्वातोऽत्यंतसंजातकामश्च चहेहः स्नेहकृन्मित्रवर्गे सत्सेरंभः संभवेद्युक्तसंदंभश्चेत्स्यात्कुंभोऽसिंभवो यस्य लग्ने ११ दक्षोऽल्पभक्षोऽल्पमनोभवश्च सुहृद्धन-
हेमाढ्यपत्नीऽतिभूतः स्यान्नाव नानारत्नविधाने मीनाभिधाने जनने विलग्ने १२ भवेदलं लग्नबलं यथोक्तं विलग्नकाले प्रबले प्रसूतौ तस्मिन्बलोने यदि वा
विलग्ने युक्तेऽस्थिते क्रूरखगैस्तदाल्पम् १३ नन्वेवमुदाहृतानां संवत्सरादि फलानां समयनियमाभावात् निराधारकत्वेन फलादेशः कथं सम्यक्प्रवर्ततीति त्व-
यमेव किमर्थमुक्तमिति चेन्न समयनियमोऽप्यस्ति तथाहि उक्तानि संवत्सरपूर्वकाणां फलानि तत्स्यापि रीति प्रकल्या सांवत्सरं सावनवर्षपस्य पाके यन बुधप्रभ-
वंवराप्रीः १४ मासोद्भवं मासपतेस्त्वखंदोर्यणोडुपस्य प्रभवं वचयत्स्यात् तिथिप्रभूतं करणोद्भवं च चंद्रांतरेऽर्कस्य दशाविभागे १५ वारोद्भवं वारविभोर्विचिंत्ये
योगोत्थमिंदुर्कवलान्वितस्य लग्नोद्भवं लग्नपतेर्दशायां दृग्भावयुक्ताशिजमेवमूह्यम् १६ इति लग्नफलम् अथ सूर्यनक्षत्रफलम् डिंभारभ्य चक्रे रविभाच्च

मानंयचन्मसेन्मूर्धिमुखेनपंच द्वेस्कंधयोर्द्वेभुजयोर्द्व पंचपाणिहृयेवक्षसिपंचभानि १ नाभौचलिंगेन्वतकैमेकंजान्वोर्द्वयंपादयुगेभषट्कम् पुंसांसदैवपरिकल्प
नीयंमुनिप्रवर्यैः फलमुक्तमत्र २ सद्रत्नचामीकरचारुवस्त्रविचित्रवालव्यजनातपत्रैः विराजमानोमनुजोनितांतंमौलिस्थलेमेनलिनीप्रभोस्थित ३ मिष्टाशे
नमनाशासनानांभोक्ताचवक्तासततंप्रसन्नः स्मितानननोनावदनानयातंभानोर्भवेद्वंजननेहियस्य ४ वृषासकोवंशविभूषणश्चमहोत्सवार्यप्रथितः प्रता
पी नरोऽतिभूतोऽतितरामुदारोदिवाकरोदुस्थितमंसकेचेत् ५ त्यक्तस्वदेशः पुरुषोविशेषाद्भवेद्धतः शौर्ययुतोनितांतम् विदेशवासम [illegible] तिष्टोमार्ते
डभंवाहुगतंप्रसूतौ ६ वदान्यतासद्गुणवर्जितश्चपण्यादिरत्नादिपरीक्षकश्च सतारतताभ्यांसहितोहिमर्त्योदिवामणेर्भेयदिपाणिसं [illegible] तुल
स्वकुलेसुशीलोमालोविशालोतमकीर्तिशीलो शास्त्रेप्रवीणः परिस्मृतिकालेवक्षस्थलेचेन्नलिनीशभंस्यात् ८ समासमेत्तोरणकर्मभीरुः कलाकलापा
कलनैकशीलः धर्मप्रवृत्तिःसुतरामुदारोनाभीसरोजेंऽवुजवंधुतारा ९ कंदर्पभूयोजितसाधुकर्मासद्गीतनृत्याभिरुचिः कलाज्ञः चेज्जन्मकालेनलि
नीशभंस्याद्गुह्यस्थलेसोऽतुलकीर्तियुक्तः १० नानादेशानेकथासंप्रचारः कापोन्तोहस्वश्चचलः क्षामगात्रः धूर्तोमर्त्यः सत्वहीनश्चनूनंजानुस्थमार्तभानुभं
जन्मनिस्यात् ११ कृषिक्रियायांनिरतोऽल्पधर्मः शत्रुस्थितः सेवनकर्मकर्त्ता नासयदिस्यादरविंदबंधोः पादारविंदेचनरस्यसूतौ परद्युतिस्वल्पधनस्तत्रफल
म् अथाऽवयवस्वरूपम् झस्तमीनवृषाजघटामिथुनधनुकर्किमृगमुखाश्वसमाः वृश्चिककन्यामृगपतिवणिजादीर्घाः समाख्याताः १ एभिर्लग्नादिगणैः
शीर्षप्रभृतिनृशरीराणि सदृशानिविज्ञायंतेस्थितगगनचरैश्चैवतुल्यानि २ इद्दलग्नतःसकाशात्कालपुरुषाकारश्चक्रंद्रष्टव्यम् अथद्वादशभावानांफ
लानि भिन्नेद्वादशाधविधायविलग्नचक्रंचतत्रन्यसेद्वयाद्द्वादशराशयोऽतिविशदाचामागमार्गक्रमात् अंश्यास्तत्रनभश्चराः स्फुटतराराशौचयत्रस्थिता
स्तेभ्यः साधुफलंतत्साधुसुधियानावंहिहोरागमात् १ रूपंतथावर्णविनिर्णयश्चचिन्हानिजातिर्वयसःप्रमाणम् सुखानिदुःखान्यपिसाहसंचलग्नेभवि
लोक्यंखलुसर्वमेतत् २ विलोकितेसर्वखगैर्विलग्नेलीलाविलासैः सहितोवलीयान् कुलेन्द्रपालोविपुलायुरेवभयेनमुक्तोऽरिकुलस्यहंता ३ सौम्याःस्वपे
लग्नगतायदिस्युःकुर्वंतिजातंनृपतिंविनीतम् पापास्तुयदादुःखदरिद्रशोकैर्युतंनितांतंवहुमस्तकंच ४ लग्नात्प्रूनषडष्टके पिच्वशुभाः पापैर्नयुक्तेक्षिताश्चे

चीरेंदुपतिः सितेऽधिपतिः स्त्रीणां वनितापतिः दीर्घायुर्गदावर्जितो गतभयः सौंदर्यसख्यान्वितः संन्नीलो यदनेश्वरे निगदितो मर्त्यः प्रसन्नः सदा ५ अथार्को
स्थिग्रहाणां हि गुणवर्णविनिर्णयः आकारोऽपि शरीरस्य प्रोच्यते मुनिसंमतः ६ भूरोगभीरश्चतुरः सुरूपः स्यात्सूर्यगश्चाल्पककुंतलश्च सुवृत्तगात्रो मधुपिंगने
त्रो मित्रो हि पित्ताश्व्यधिको नतांगः ७ महाविलासोऽमलधीः सुकांतो रक्ताधिकः कुंचितकृष्णकेशः कफानिलात्मांबुजपत्रनेत्रो नक्षत्रनाथः सुभगोऽतिधीरः
८ मज्जासारो रक्तगौरो रक्तगौरोऽत्युदारो हि क्रूरः पैत्तिकस्तामसश्च चंडः पिंगाक्षो युवा सर्वकार्यः खर्वश्चोर्वीसूनुरग्निप्रभः स्यात् ९ श्यामः शिराजश्च क
लाविधिज्ञः कुतूहली कोमलवाक् त्रिदोषी रजोधिको मध्यमरूपधृक् स्यादाताम्रनेत्रो द्विजराजपुत्रः १० ह्रस्वाकारश्चास्त्वामिकिरणभः सम्यवसारः सुस्वरो
दारबुद्धिः दीर्घः पिंगाक्षः कफी चातिमांसः प्राज्ञः सूत्रैः कीर्तितो जीवसंज्ञः ११ सजलजलदनीलश्लेष्मलश्चानिलात्मा कुवलयदलनेत्रो वक्रनीलालकश्च
सुसरलभुजशाली राजसश्चातिकामी मदयुतगजगामी भार्गवः शुक्रसारः १२ श्यामलोऽतिमलिनश्च शिरालः सालसश्च जटिलः कृशदीर्घः स्थूलदंतनख
पिंगटनेत्रोऽनिलात्मा शनिश्च खलतानिलकोपैः १३ लग्नस्य नंदांशपतेर्हि मूर्त्या मूर्तिः समाना बलशालिनो वा स्यादिंदुनंदांशपतेस्तु वर्णः पर्वि चाप्याः कुलजातिदे
शाः १४ संत्यंगवपुः शशिसूर्यजीवास्तमोऽप्यमारो चरजोत्तराक्रौ त्रिशत्त्ववेयस्य गतोदिनेशो वा योगुणस्तस्य खगस्य नूनम् १५ शिरोऽक्षिणी कर्णनसाकपोलौ ह
नुर्मुखं च प्रथमे दृकाणे कंठांसदोर्दंडककुक्षिवक्षः क्रोडं च नाभिस्त्रिलवे द्वितीये १६ वस्तिस्तनो लिंगगुदे तथांडावूरू च जानू चरणौ तृतीये क्रमेण लग्नात्परपूर्व
षट्कं वामं तथा दक्षिणमंगमत्र १७ मत्संति लक्ष्म बलात्तु सारं कुर्वंति सौम्याव्रणमत्र पापाः स्वांशे स्वभावास्थिरगाश्च लक्ष्म युक्तेक्षिताः सौम्यखगैः खरैस्तैः १८ रवे
र्व्रणः काष्ठचतुष्पदोत्थः शृंग्यंबुजवारिभवः शशांकात् कुजाद्विषाग्न्यस्त्रकृतश्च चांद्रेर्भौमः शनेश्चापि मरुद्दृषद्भ्याम् १९ कुर्यात्व्रणं क्रूरखगोऽरिभे वा शुक्रः पु
मेलस्मातिलंबृहत्पः यद्भं यत् पवनः धान्वितं स्यात्व्रणो राशितुल्यः २० मेषे शशांकः कलशे शनिश्च झषे गुरुः स्याद्भृगुर्मृगस्थः मातस्यवित्तनवसूपीजु
तेः स्वबाहुवीर्येण नरो वरेण्यः २१ चतुर्थकेंद्रेषु भवंति पापा वित्तस्थिताश्चापि च पापखेटाः नरो दरिद्रोऽतितरां निरुक्तो भयंकरश्चात्र कुलोद्भवानाम् २२ सुधांशुमूर्ति
त्रापरि मूर्तिवर्ती बृहस्पती राज्यगतः शशांकः नरस्तपस्वी विजितेंद्रियश्च स्याद्राजसो बुद्धिविराजमानः २३ कन्यायां च तुलाधरे सुरगुरुर्मेषे वृषे वा भृगुः सौम्यात्स्वि

क्रूराभिधः शुभखगैर्दृष्टः कृतघ्नस्तताम् नूनंयातिनरोविचारचतुरो पीयौदार्यजातादरोनित्यानंदभरोगुणैर्वरतरोनिष्ठापरोवित्तवान् २४ पद्मेसमौरौभवतोतुषारि
नरोभवेच्चौर्यपरोनितांतम् स्वकर्मसामर्थ्यविधेर्विशेषात्परांघ्रिपाणीन कृमुष्णीच्छिनत्ति २५ प्रसूतिकालेकिल यस्यजंतोः कर्केऽर्कजश्चेन्मकरेमहीजः चौर्य
भ्रमंमीदृगवचंडदंडाच्छ्यादिखंडानिभवंतिनूनम् २६ कुंभेचमीनेमिथुनाभिधाने धृगासनेसुर्यदिपापखेटः कुचेष्टितः स्यात्पुरुषोनितांतं वज्रेण
नूनंनिधनंहितस्य २७ यस्यप्रसूतौखलुनैधनस्थः सौम्यग्रहःसौम्यनिरीक्षितश्च तीर्थान्यनेकानिभवंतितस्यनरस्यसम्यक्कुमतिसुवस्य २८ बुधत्रिभा
गेनयुतेविलग्नेकेंद्रस्थचंद्रेणनिरीक्षितेच शिष्टान्वयेयद्यपिजातजन्मा स्यान्नीचकर्मामनुजःप्रकामम् २९ भानौद्वितीयेभवनेतृतीये निशापतिर्नोशुभवीक्षितो वा
क्षितश्च भूनंदनेवैमदनेतदानीं स्यान्मानवोहीनकलेवरःसः ३० पापांतरालेचभवेत्कलावान् तथार्कसूनुर्मदनालयस्थः कलेवरस्याधिककलेजनस्यसा
तस्यप्लीहकगुल्मरोगैः ३१ शशीदिनेशास्यपदानवांशे भवो हि दिनेशः शशिनोनवांशे एकत्रसंस्थोयदितौभवेतां लक्ष्मीविहीनोमनुजःसनूनम् ३२ व्ययेगरि
मातोनिधनेधनेचनिशाकरारार्कशनैश्चराःस्युः बलान्वितास्तेत्वनिलाधिकत्वात्तेजोविहीनेननयनंप्रकुर्युः ३३ पापास्त्रिपुत्रायगताभवंति विलोकितानैवशु
भैर्नभोगैः कुर्वंतितेकर्णविनाशनंच जामित्रयातःखलुकर्मघातम् ३४ धनव्ययस्थानगतश्चशुक्रोवक्रोऽथवाकर्णरुजंकरोति नक्षत्रनाथोयदितत्रसंस्थो
दृग्दोषकारीकथितोमुनींद्रैः ३५ एतेहियोगाःकथितामुनींद्रैः सांदर्शनंयस्यनभश्चरस्य कर्त्तव्यफलंतस्यचपाककाले सुनिर्मलायस्वमतिस्फुतेन ३६ इतिजा
तकाभरणेतनुभावः अथधनभावः स्वर्णादिधातुक्रयविक्रयश्च रत्नादिकोशोऽपिचसंग्रहश्च एतत्समस्तंपरिचिंतनीयं धनाभिधानेभवनेसुधीभिः १ मानुभूतनु
यमात्तुतन्नेश्चेद्धनस्यभवनंयुतदृष्टं जायतेहिमनुजोधनहीनः किंपुनःकुशशशीक्षितयुक्तम् २ धनालयेयस्यकिलमंगलेदृग्दोषदौमंदविलोकनेन ।।
शनिर्धनस्थानगतःकरोतिधनाभिवृद्धिंबुधेनदृष्टः ३ धनेदिनेशोऽतिधनानिनूनंकरोतिमंदेननवीक्षितश्च शुभाभिधानाधनभावसंस्थानानाधनान्यागम
नानिकुर्युः ४ गीर्वाणवंद्योद्रविणोपयातः सौम्येक्षितश्चेद्विपणंकरोति सोमेनदृष्टोधनभावसंस्थः सोमस्यसूनुर्धनहानिदःस्यात् ५ धनस्थितोऽर्केनविलो
कितश्चकुजःशशांकोऽपिधनादिकानाम् पूर्वार्जितानांकुरुतोविनाशं नवीनवित्तप्रतिबंधनंच ६ वित्तस्थितोदैत्यगुरुःकरोति वित्तागमंसोमसुतेनदृष्टः ।। स

खलस्य राशिः खलखेचरयुतः सौम्यग्रहालोकनवर्जितश्च संतानहीनो मनुजस्तदानीम् ॥ १० ॥ कविः कलत्रे दशमे मृगांकः पाताल पाताः खलखेचराश्च
नि प्रसूतिकाले यदि मानवस्य संतानहीनं जनयंति नूनम् ११ सुतोसितो नीचसितेन दृष्टे वक्रन्य … यानिशियोरपीशम् … तीभवान्यात्मजभावनाथे यावन्निवं
शेशिन्नुसमितिः स्यात् १२ शुक्रेंदुवर्गे पापयुते सुताख्ये युक्तेक्षिते वा भृगुचंद्रमोभ्याम् भवंति कन्याः समराशिवर्गे पुत्रास्ततस्त्रिविषमाभिधाने १३ मंदस्य राशिः
सुतभावसंस्थो मंदेन युक्तः शशिनेक्षितश्च दत्तात्मजाप्तिः शशिवत् बुधेऽपि क्रीतः सुतस्तस्य नरस्य वाच्यः १४ संतानाधिपतेः पंचषष्टरिःफस्थिते खले सु
तभावोसंभवेत्तस्य यद्विजातो न जीवति १५ मंदस्य वर्गे सुतभावसंस्थे निशाकरस्थेऽपि च वीक्षितेस्मिन् दिवाकरेणोशनसा नरस्य पुनर्भवासंभवसूनुसंप्राप्तिः
१६ ज्ञानेगणः सप्तनिपुत्रभावं बुधेक्षितेनोर रविभूमिजाभ्याम् पुत्रो भवेत्क्षेत्रभवोऽथवो … पेगणेऽपि गेहे रविजेन दृष्टे १७ नवांशकाः पंचमभावसंस्थाः
न्मिते पापखगैः प्रदृष्टाः नश्यंति गर्भाः खलु तत्प्रमाणा वेद्योक्षणं नो शुभखेचराणाम् १८ भूनंदनो नंदनभावयातो जातं च जातं तनयं निहंति दृष्टे परानि
त्रशिखंडिजेन भृगोः सुतेन प्रथमोपपन्नम् १९ इति सुतभावः अथ शत्रुभावः वैरिव्रातः क्रूरकर्मामयानां चिन्ताशंकामातुलानां विचारः होरापारावार
पारंप्रयातैरेतत्सर्वं शत्रुभावे विचिंत्यम् १ दृष्टियुतिर्वा खलखेचराणाम् अरातिभावे रिपुविनाशनं स्यात् शुभग्रहाणां युतिदृष्टितोऽत्र शत्रूद्गमोऽप्यास[illegible]संभवः
स्यात् २ इति शत्रुभावः अथ जायाभावः रणांगणं वापि वणिक्क्रियाश्च जायाविचारं गमनं प्रमाणम् शास्त्रप्रवीणैर्हि विचारणीयं कलत्रभावे किल सर्वमे
तत् १ मूर्तेः कलत्रस्य नवांशको वा द्विपटकभागस्थितवक्रशुभानाम् अनेन योगेन हिमानवानां स्यादंगनानामचिरादवाप्तिः २ सौम्यैर्युते सौम्यमसौम्यदृष्टे
जायागृहे देहिनामंगनाप्तिम् कुर्यान्नूनं वैपरीत्यादभावो मिश्रत्वेन प्राप्तिकालेप्रलापः ३ लग्नात्व्यये वारिपुमंदिरे षा दिवाकरे द्यूनभवत्तदानीम् स्यान्मा
नवस्यात्मज एक एकभार्याऽपि वेकोति वदंति संतः ४ गंडांतकालेऽपि कलत्रभावे भृगोः सुते लग्नगतेऽर्कजाते वंध्यापतिः स्यान्मनुजस्तदानीं शुभेक्षितं नो भव
नेत्वलेन ५ व्ययालये वा मदनालये वा खले शुक्रस्यालयगे हिमांशो कलत्रहीनो मनुजस्तनूजैर्विवर्जितः स्यादिति वेदितव्यम् ६ प्रसूतिकाले च कलत्रभावे यमस्य
भूमीतनयस्य वर्गे ताभ्यां प्रदृष्टे व्यभिचारिणी स्याद्भर्तापि तस्या व्यभिचारकर्ता ७ शुक्रेंदुपुत्रौ च कलत्रसंस्थौ कलत्रहीनं कुरुतो नरं तौ शुभेक्षितौ तौ वयसोवसाने काम

एमुदितमृषिवर्यैर्मानवानां प्रयत्नादिह हि दशमभावे सर्वकर्मप्रकामम् गगनपरिहस्थुपाराशि खेटस्वभावैः सकलमपि विचिंत्यं सत्प्रयोगात्सुधीभिः २ तयोःस
काशाद्दशमे शशांकेवृत्तिर्भवेत्तस्य नरस्य नित्यम् नानाकलाकौशलवाग्विलासैः सर्वोद्यमैः साहसकर्मभिश्च ३ तनोः शशांकाद्दशमे बलीयान्स्याज्जीव
नंतस्य खगस्य वृत्त्या बलान्विताद्वा गृहपतेस्तु यद्वा वृत्तिर्भवेत्तस्य खगस्य पाके ४ दिवामणिः कर्मणि चेद्द तन्वो द्रव्याण्यनेकोद्यमवृत्तियोगात् सात्त्वाधिकत्वेन
रनायकत्वं पुष्टत्वमंगे मनसः प्रसादः ५ लग्नेंदुतः कर्मणि चेन्महीजः स्यात्साहसः क्रौर्यनिषादवृत्तिः नूनं नराणां विषयाभिसक्तिर्दूरेनिवासः सहसाक
दाचित ६ लग्नेंदुभ्यां कर्मगो रौहिणेयः कुर्याद्द्रव्यं नायकत्वं बहूनाम् शिल्पेऽभ्यासः साहसं सर्वकार्ये विद्वत्त्वाज्जीवितं मानवानाम् ७ किंतु ग्लतः शीतमयूख
तो वा मानेमघोनः संचिवो यथा स्यात् नानाधनाभ्यागमनानि पुंसां विचित्रवृत्त्या नृपगौरवं च ८ होरायाश्च निशाकराद्भृगुसुतो मेषूरणे संस्थितो नानाशास्त्रक
लाकलापविलसद्वृत्त्यादिशेज्जीवनम् दाने साधुमतिं तथा विनयतां कामं धनाभ्यागमं मानं मानवनायकाद्विरेलं शीलं विशालं यदा ९ होरायाश्च सुधा
करात्रविसुतः स्यातोखमध्यस्थितो वृत्तिं हीनतरां नरस्य कुरुते कार्श्यं परं सर्वदा खेदं वादभयं च धान्यधनयोर्हीनत्वमुच्चैर्मनश्चित्तोद्वेगं चपलं शशीलंवनो निर्मल
म १० सूर्यादिभिर्व्योमचरैर्विलग्नादिंदोः स्वपाकेक्रमशः प्रकल्प्या अर्थोपलब्धिर्जनकाज्जनन्याः शत्रोर्हितादभ्रातृकलत्रभृत्यात् ११ रवेंदुलग्नास्पदसंस्थिता
शपतेस्तु वृत्त्या परिकल्पयेत्ताम् सदोषधीयाप्यदितृणेः सुवर्णे दिवामणिर्वृत्तिविधिं विदध्यात् १२ नक्षत्रनाथोऽत्रकलत्रतश्च जलाशयोत्पन्नकृषिक्रियादेः कु
जोऽग्निसत्साहसधातुशस्त्रैः सोमात्मजः काव्यकलाकलापैः १३ जीवो द्विजात्माकरदेवधर्मैः शुक्रो महिष्यादिकरौप्यरत्नैः शनैश्चरो नीचतरप्रकारैः कुर्या
न्नराणां खलु कर्मवृत्तिम् १४ कर्मस्वामी ग्रहो यस्य नवांशे परिवर्तते तत्तुल्यकर्मणावृत्तिं निर्दिशंति मनीषिणः १५ मित्रारिगेहोपगतैर्नभोगैस्तत्तत्सकाशादर्थः परिकल्प
नीयः तुंगे पतंगे स्वगृहे त्रिकोणे स्यादर्थसिद्धिर्निजबाहुवीर्यात् १६ लग्नार्थलाभोपगतैः सवीर्यैः शुभैर्भवेद्भूधनसौख्यमुच्चैः इतीरितं पूर्वमुनीप्रवर्यैर्बलानुमाना
त्परिचिंतनीयम् १७ इति दशमभावः अथ लाभभावः गजाश्वहेमांबररत्नजातमांदोलिकामंगलमंडनानि लाभः किलैषाम खिलं विचार्यमेतत्तु लाभ स्वगृहे ग्रह
हैः १ सूर्येण युक्ते च विलोकिते वा लाभालयेतस्य गणोऽत्र चेत्स्यात् भूपालतश्चौरकुलात्कलेर्वा चतुष्पदादेर्बहुधनाप्तिः २ चंद्रेण युक्तं च विलोकितं वा लाभालये

भा·भ·
११

चेद्गणाश्रितंचेत् जलाशयस्त्रोगजवाजिवृद्धिः पूर्णेभवेत्क्षीणतरेविलोमम् ३ लाभालयेमंगलयुक्तदृष्टेप्रकृष्टभूषामणिहेमलब्धिः विचित्रपात्रावहुसं
हृसीस्यान्नानाकलाकौशलवृद्धियोगैः ४ लाभेसौम्यगणाश्रितेसतियुतेसौम्येनसंवीक्षितेनानाकाव्यकलाकलापविधिनाशिल्पेनलिप्यासुखम् युक्तिद्रव्य
लाभवेद्धनचयःसत्याहसैन्यधर्मैः सत्यंवापिवणिक्जनैर्बहुतरंकीर्तिर्नृणांकीर्तितम् ५ यत्नक्रियासाधुजनानुयातोराजाश्रितोत्कृष्टकृपोनरःस्यात् द्रव्ये
णहेमप्रचुरेणयुक्तोलाभेगुरोर्वर्गयुगीक्षणंचेत् ६ लाभालयंभार्गववर्गयातंयुतेक्षितंवायदिभार्गवेण वेश्याजनैर्वापिगमागमैर्वासद्रोप्यमुक्ताप्रचुरास्तल
ब्धिः ७ लाभवेश्मनिशनौक्षितियुक्तेतद्गणेनसहितेसतिपुंसाम् नीललोहमहिषीगजलाभोग्रामसंसदपुरगौरवामिश्रः ८ युक्तेक्षितेलाभगृहेसुखारेमखौ
भुभानांसमवस्थितेच लाभोनराणांवहुधाऽथवाऽस्मिन्सर्वेग्रहेर्युक्तनिरीक्ष्यमाणे ९ इतिलाभभावः अथव्ययभावः हानिर्दानंव्ययश्चापिदंडोनिर्बंधए
व च सर्वमेतद्व्ययस्थानोद्वितनीयंप्रयत्नतः १ व्ययालयस्थक्षीणकरःकलावान्सूर्योऽथवाहावर्षितत्रसंस्थौ द्रव्यंहरेद्भूमिपतिस्तुतस्यव्ययालयेवाकुजदृष्टियु
क्ते २ पूर्णेदुसौम्येज्यसिताव्ययस्थाःकुर्वंतिसंस्थाधनसंचयस्य व्ययस्थितेसूर्यसुतेकुजेनयुक्तेक्षितेवित्तविनाशनंस्यात् ३ इतिव्ययभावः अथभावफ
लोपयुक्तत्वेनविशेषआयोनिरूप्यते लग्नेदृश्यकलत्रपुत्रभवनेस्वस्वामिसौम्यग्रहैर्युक्तेवाप्यविलोकितेरवसुतदातत्तामिरावश्यकौ लग्नेचेत्तवित्ताश्रि
तोर्यविसुतोजायाश्रितोभृगुसुतःजायायाश्चमहीसुतःसुतगतःकुर्यात्सुतानांक्षतिं १ असौम्यमध्यस्थितभार्गवश्चेत्पातालरंध्रेवलरवेरयुक्ते सौम्यरदृष्टेभृगु
जेत्वनीनाशोभवेत्साशकुनानाद्ये २ दिवाकरेद्यूनपवैरियातोजायापतौएकविलोचनोऽरः कलत्रधर्मात्मजगौसिताकौपुमान्भवेत्स्त्रीणकलत्रएव ३
मसंधियातेचसितेस्मरस्थेतनौप्रयत्नेनतुभानुसूनौ वंध्यापतिःस्यान्मनुजःतदानींसुतालयेनोशुभदृष्टियुक्तम् ४ क्रूरावहोराःस्मरिःप्रयाताःसुतालये
हीनवलःकलावान् एवंप्रसूतौकिलयस्ययोगोभवेत्सभार्यातनयैर्विहीनः ५ सितेऽस्तयातेशनिभौमवर्गेभौमार्कदृष्टेपरदारगामी मंदारवद्रापदिसंयु
तोःस्युः पौस्त्वंव्यस्तकौरमणीनरोस्तः ६ घूनेऽर्कजारौसभृगौशशांकात्पुत्रभार्यंकुरुतोनरंतौ स्यातांत्वनारीसगपाःस्मरस्थौसौम्येक्षितौतौशुभदौनृनार्योः
७ परस्परांशोपगतौरवींदुरोषामयंतौकुरुतोनराणाम् एकैकगेहोपगतौतुतौवातमेवरोगंकुरुतोनितांतम् ८ मंदावनीसूनुरवींदवश्चेद्भूधारिवित्तव्यय

राम·
११

भावसंस्थाः आद्यंभवेत्तान् समन्वितस्य खेटस्य दोषात्पुरुषस्य नूनम् ९ मृगालिगोकर्कटकास्त्रिकोणे प्रसूतिकाले सबलखेटयुक्ताः निरीक्षिता वा जनयंति
जातं कुलेन युक्तं प्रवदंति संतः १० मंदार्कचंद्रास्त्रिसुतायधर्मे सौम्यैर्नयुक्तान च वीक्षितान्वेत् कर्मप्रणाशं जनयंति नूनं स्मरास्थिता से व नाभिघातम् ११
यस्ते विधौ लग्नगताश्च पापास्त्रिकोणगा जन्मपि शावकस्य यस्ते विधौ लग्नगते तथैव नेत्रोपघातः खलु कल्पनीयः १२ लग्नस्थिते देवपुरोहिते ऽस्ते शनौ च वा
ताधिकत्तानि तांतम् जीवे विलग्ने ऽवनिनंदने ऽस्ते मदोद्धतः स्यात्पुरुषो विशेषात् १३ स्मरे त्रिकोणे धरणीतनूजे शनौ तनौ वा पवनप्रकोपः क्षीणेन्दु मंदौ व्यय
भावयातौ नराः पि वाताधिकतां नराणाम् १४ वंशच्छेदकरः शशांकभृगुजक्रूरैः खकामांबुगैः शीलीकें द्रगतार्किणा बुधसुतप्र्यंशे समालोकिते जंत्ये दैत्यगुरौ
दिनेश्वरसुतस्यांशे च दासीसुतो नीचः कामगयोः खरांशुशशिनोः सौरेण संदृष्टयोः १५ वयोराशिस्तनक्षत्रमेकोकृत्य पृथक् पृथक् द्विचतुस्त्रिगुणं कृत्वा स
नाऽष्टसभाजितम् १६ अथ तपोर्भवेद्दुः खी मध्ये शून्यधनः स्मृतः स्यान्नत्र येन्न शेषं तु मृत्युः सांकेषु वै जयी १७ इत्यरिष्टाध्यायः अथ रविभावः लग्नेऽर्के
ऽल्पकचः क्रियालसः तनुः क्रोधी प्रचंडोन्नतो मानी लोचनरूक्षसुकर्कशतनुः शूरोऽक्षमी निर्घृणः पुत्राप्तः शशिभे क्रियस्थितिहरः सिंहाननशाधः पुमान्
दारिद्र्योपहतो विनष्टतनयः संस्थस्तुलासंज्ञके १ धनसुतोत्तमवाहनवर्जितो हतमतिः सज्जनोज्झितसौहृदः परगृहोपगतो हि नरो भवेद्धनमणे द्रविणप
दिसंस्थितिः २ प्रियंवदः स्याद्धनवाहनाढ्यः सुकर्मवित्तोऽनुचरान्वितश्च मितानुजः स्यान्मनुजो बलीयान् दिनाधिराजे सहजेऽधिसंस्थे ३ सौख्येन यानेन ध
नेन हीनं जातस्य चित्तोपहतिप्रवृत्तम् चलं निवासं कुरुते पुमांसं पातालशालीन हिनी विलासी ४ सह्यापसं शैलदुर्गे शुभंके सौख्यायुक्त स क्रियार्थैः वि
मुक्तम् ध्यांतरवांतमानवहिभकुपान्ननुस्थाने भानुमान्वर्त्तमानः ५ शत्रुवसौख्येनाऽन्वितः शत्रुहंता सतोपेतश्चारुपानो महौजाः स्वर्क्षे मित्रेः स्याद्माल्ये
हिमंतुः शत्रुक्षेत्रे मित्रसंस्थो यदि स्यात् ६ स्त्रियाविमुक्तोहतकायकांतिर्मयामपार्स्यासहितः कुशीलः नृपप्रकोपार्तिकशो मनुष्यः सीमंतिनीसद्मनि पद्मि
नीशे ७ नेत्राल्पत्वं शत्रुवर्गाभिवृद्धिं वृद्धिभ्रंशः पूरुषस्याऽतिरोषः अर्थाल्पत्वं कार्श्यमंगे विशेषाद्रायुः स्थाने पद्मिनीप्राणनाथे ८ धर्मकर्मनिरतश्च सन्म
तिः पुत्रमित्रजनसौख्यान्वितः सदा मातृवर्गविषमो भवेन्नरस्त्रित्रिकोणभवने दिवामणौ ९ सदबुद्धिवाहनधनागमनानि नूनं भूपप्रसादसुतसौख्यसमन्वितानि

साधूपकारकरणं मणिभूषणानि मेषूरणे दिनपतिः कुरुते नराणाम् १० गीतप्रीतिं चारुकर्मप्रवृत्तिं वंचकत्वं कीर्तिं वित्तपूर्तिं विनीताम् भूपात्प्राप्तिं नित्यमेवप्र
कुर्यात्ख्यातिस्थाने भानुर्मानमानवानाम् ११ तेजोविहीनं नयनेभवेतां तातेन साकं गतविनवृत्तिः विरुद्धबुद्धिर्मयभावयाते कांते न लिन्याः फलमुक्तमार्यैः
१२ इति रविभावः अथ चंद्रभावः दाक्षिण्यरूपधनभोगगुणैर्वरेण्यश्चंद्रे कुलीरवृषभाजगते विलग्ने उन्मत्तनीचबधिरो विकलोऽथ मूकः शेषेषु नाभव
ति हीनवत नौ विशेषात् १ सुखात्मजद्रव्ययुतो विनीतो भवेन्नरः पूर्णविधौ द्वितीये क्षीणे स्खलद्वाक्य विधनोऽल्पबुद्धिर्न्यं नाधिकत्वे फलतारतम्यम् २
हिंस्रः सवर्गः कृपणोऽल्पबुद्धिर्भवेन्नरो वै धृतनाश्रयश्च दयाभयाभ्यां परिवर्जितश्च द्विजाधिराजे सहजे प्रसूतौ ३ जलाश्रयोत्पन्नधनोपलब्धिं कृष्यंग
नावाहनसूनुसौख्यम् प्रसूतिकाले कुरुते कलावान् पातालसंस्थो द्विजदेवभक्तिम् ४ जितद्विषः सत्यवचाः प्रसन्नो धनात्मजावाप्तसमस्तसौख्यः सुसंग्र
हीस्यान्मनुजः सुशीलः प्रसूतिकाले तनयालयेऽब्जे ५ मंदाग्निः स्यान्निर्दयः क्रौर्ययुक्तो नाल्पालस्यो निष्ठुरो दुष्टचित्तः रोषावेशात्संततं संजातशत्रुः शत्रु
क्षेत्रे रात्रिनाथे नरः स्यात् ६ महाभिमानी मदनातुरश्च नरो भवेत्क्षीणकलेवरश्च धनेन हीनो विनयेन चंद्रानने स्थानविराजमाने ७ नानारोगैः क्षीणदेहो
ऽतिनिःस्वश्चौराराति क्षोणिपालाभितप्तः चित्तोद्वेगैर्व्याकुलो मानवः स्यादायुःस्थाने वर्तमाने हिमांशौ ८ कलत्रपुत्रद्रविणोपपन्नः पुराणवार्ताश्रवणा
नुरक्तः सुकर्मसत्तीर्थपरो नरः स्यात् यदा कलावान्नवमालयस्थः ९ क्षोणीपालादर्थलब्धिश्च शाला कीर्तिर्मूर्तिः सततसंतोषयुक्ता वंचत्स्वस्मीशीलसंशा
लिनोस्यान्मानस्थाने यामिनीनायकश्चेत् १० सन्मानना नानाविधवाहनाप्तिः कीर्तिश्च सद्भोगगुणोपलब्धिः प्रसन्नतालाभविराजमाने ताराधिराजे मनु
जस्य नूनम् ११ हीनत्वं वै चारुशीलेन मित्रैर्वैकल्यं स्यान्नेत्रयोः शत्रुवृद्धिः रोषावेशः पूरुषाणां विशेषात्पीयूषांशौ द्वादशे वेश्मनीह १२ इति चंद्रभावः अथ
भौमभावः अतिमतिभ्रमतां च कलेवरे क्षतयुतत्वमुसाहसमुग्रताम् तनुभृतां कुरुते तनुसंस्थितोऽवनिसुतो गमनागमनानि च १ अधनतां कुजनाश्रयतां त
था विमतितां कृपयाऽतिविहीनताम् तनुभृतां विदधाति विरोधितां धननिकेतनगो भुवनंदनः २ भूपप्रसादोत्तमसौख्यमुच्चैरुदारतां चारुपराक्रमश्च
धनानि च भ्रातृसुखोज्झितत्वं भवेन्नराणां सहजे महीजे ३ दुःखं सुहृद्वाहनतः प्रवासः कलेवरे रुग्बलता बलत्वम् प्रसूतिकाले किल मंगलाख्ये रसातले

